सर्वप्राणिनामंतर्हृदिसंस्थितः आत्मा आदानादिकर्तायोगैश्वर्यवान्सहजाणिमादियोगैश्वर्यवान् सर्वोपापानामीश्वरो वाहारिः संसारदुःखहरणशीलः कुन्त्याः [illegible]
पाः गर्भस्वमायया स्वयोगसामर्थ्येन यथाब्रह्मास्त्रं नदहेत्तथावृणोत् आत्मनागूढिनमकरोदित्येकान्वयः १७ नत्वपितब्रह्मशिरोब्रह्मास्त्रममोघमव्यर्थमप्रतिक्रियमप्रति [illegible]
गशाम्यदित्येकान्वयः १८ योमाययादेव्यादीप्यमानयाइच्छयाब्रह्मादिजगत्सृजति रक्षति संहरति स्वयंजन्मादिराहितस्तस्मिन्सर्वाश्चर्यस्वरूपेऽच्युतेविनाशरहितेहरौ [illegible]
श्चर्यमामंस्थानचिंतयेत्येकान्वयः १९ ब्रह्मास्त्रतेजोमुक्तैरात्मजैर्युधिष्ठिरादिभिः पुत्रैः सहसतीसाध्वी २० संसारव्यावृत्तयेऽगाधंपुरुषमिति हिरण्यगर्भव्यावृत्तयेईश्वरमिति जगत्स्रष्टृत्वाद्यैश्वर्यतत्त्वं
नततोव्यावृत्तमित्यतः प्रकृतेः परमिति एतत्सर्वंकुतइत्युक्तमलक्ष्यमिति लक्षणयावृत्त्यापिज्ञातुमशक्यं तर्हिशून्यप्रायमित्यतउक्तं सर्वभावानामंतर्बहिश्चसत्सर्वमितिश्रुतेः [illegible]
रिक्ततत्त्वमित्यतउक्तं भूतप्रलयेपिध्रुवंनित्यमविनाशिनं २१ त्वांनमस्येइत्यपरोक्षतयोक्तस्यकथमलक्ष्यत्वमितितत्राह मायेति हेअधोक्षजवशीकृतेंद्रियसर्वस्वगुणाच्छादनरूप [illegible]
विवमायाख्यतिरस्कारिण्याच्छन्नस्त्वंमूढदृशाविपरीतज्ञानयामत्र्ययामयालक्ष्यमाणोपिनलक्ष्यसे यथानाट्यधरोनटोदृश्यमानोपितदंगुल्याद्यभिनयलक्षितकथाविशेषावेशेनरंगनलक्ष्यतेतथा [illegible]
लक्ष्यसत्त्वमित्यर्थः २२ इतोपिमादृशीनांतद्दर्शनमसुशकमित्याह तथेति अमलात्मनां अविद्याकामकर्मादिमलरहितमनसां मुनीनांसर्वज्ञाना परमहंसानांसनकादीनांभक्तियोगविधानार्थंभक्ति

अंतस्थः सर्वभूतानामात्मा योगेश्वरो हरिः ॥ स्वमाययावृणोद्गर्भं वैराट्याः कुरुतंतवे १७ यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघं चाप्रतिक्रियम् ॥ वैष्णवं तेज आसाद्य
समशाम्यद्भृगूद्वह १८ मामंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते ॥ य इदं मायया देव्या सृजत्यवति हंत्यजः १९ ब्रह्मतेजोविनिर्मुक्तैरात्मजैः सह कृष्णया ॥
प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती २० पृथोवाच ॥ नमस्ये पुरुषं त्वाद्यमीश्वरं प्रकृतेः परम् ॥ अलक्ष्यं सर्वभावानामंतर्बहिरवस्थितम् २१ मायाजव
निकाच्छन्नमज्ञाधोक्षजमव्ययम् ॥ न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा २२ तथा परमहंसानां मुनीनाममलात्मनाम् ॥ भक्तियोगविधानार्थं कथं पश्ये
महि स्त्रियः २३ कृष्णाय वासुदेवाय देवकीनंदनाय च ॥ नंदगोपकुमाराय गोविंदाय नमो नमः २४ नमः पंकजनाभाय नमः पंकजमालिने ॥ नमः पंकजने
त्राय नमस्ते पंकजांघ्रये २५ यथा हृषीकेश खलेन देवकी कंसेन रुद्धातिचिरं शुचार्पिता ॥ विमोचिताहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् २६

योगकरणविषयंत्वांतेपश्यंति तथारागादिमत्यः स्त्रियोवयंकथंत्वापश्येमहीत्येकान्वयः स्त्रीपुंसारतम्यविशेषद्योतनार्थमात्मनेपदप्रयोगः २३ तर्हिस्त्रीणांभगवदुपासनाभावेनतज्ज्ञानाभावान्मो
क्षाभावइत्याशंक्यतत्स्तुतिरेवअपरोक्षज्ञानजनकतयामोक्षसाधिकेत्यभिप्रेत्यकृष्णंस्तौति कृष्णायेति । कृषतिविलिखतिदारयतिमोहपटलमितिकृष्णः तस्मैनमोनमः नीलोत्पलदलश्यामाय [illegible]
वसुनादीव्यतीतिवसुदेवः आनकदुंदुभिः तस्यपुत्रोवासुदेवः तस्मैइति वसआच्छादनइतिधातोः इदंजगदाच्छादयदीव्यतीतिवासुदेवः तस्मैइतिवा बलात्दैत्यनिरसनशीलक्रीडादिगुणसंपन्नाय
वासुदेवायइतिवा देवकीलक्ष्मीः तानदयितुंशीलमस्येतिदेवकीनंदनः तस्मैनंदगोपनाम्नोराज्ञः कुत्सितंकुष्टंमारयतिनाशयतीतिनंदगोपकुमारः तस्मैपुराणांतरप्रसिद्धार्थप्रवलंब्यकथितोयमर्थः अन्यत्प्र
सिद्धः गवाविदोलाभोयस्यसतथातस्मै गवावेदेनलभ्यतइतिगोविंदइतिवा २४ पंकजंनाभौयस्यसतथातस्मै पंकाज्जलाज्जनन [illegible]
तस्मै पंकजैरचितामालास्यास्तीतिपंकजमालीतस्मै पंकजदलवन्नेत्रेयस्यसतथातस्मै पंकजैरंचितावृत्तासुकोमलौवाअंघ्रीयस्यसतथोक्तस्तस्मै २५ हृषीकेशहेइंद्रियप्रवर्तक [illegible]
सेनहिंसाशीलेनखलेनइंद्रियारामेणातिचिरंकारागृहेरुद्धाशुचार्पितादेवकीत्वयायथाविमोचिता हेविभोसहात्मजैः पुत्रैः [illegible] मुहुर्विपद्गणात् [illegible] २६

त्व.नवनीतापहारिणिसति यदागोपीनाम्नायशोदानित्यमुक्तंत्वांबद्धुंदामआददे तावत्तदायंत्वांप्रति भी.सर्वजनस्यभयकारिणीदुर्गापिबिभेति तत्स्मयस्याश्रुणि. कालेकज्जलअंजनाक्त तत्तथोक्तं अश्रुकालिलांजनंचतत्संभ्रमयुक्तंअक्षियस्यतत्तथोक्तं वक्त्रंविनम्यावाचीनतयाकृत्वास्थितस्यतेतवयादशाऽवस्थातासांविमोहयतीत्येकान्वयः तस्मात्तदनुकरणावेदुषामपिमोहकारणमित्याहः ३४ इदानीमेवंविधस्यतववदेवक्यांजन्मानुकरणेनिमित्तंविद्वांसोनेकधावदतीतिविज्ञापयति केचिदित्यादिना केचिद्विद्वांसःपुण्यकीर्तेर्भगवद्भक्तस्ययदोःराज्ञोन्ववायेतत्कीर्त्यैजातंत्वामाहुरित्यन्वयः नाम्नामलयस्यपर्वतस्यकीर्तयेचंदनमिव ३५ अपरेबुधादेवैर्याचितोऽजस्त्वमस्यजनस्यक्षेमायसुरद्विषांवधायचवसुदेवस्यसकाशादेवक्यामभ्यगादाविर्भूतइतिब्रुवते ३६ अन्येप्राज्ञाउदधौ हिरण्यादिभूरिभारेणसीदन्त्याआसन्नमज्जनायानावइवदुःसहासुरजनभारेणपरिखिन्नायाभुवःआत्मभुवाप्रार्थितःभारावतारणायजातोसीत्याचक्षते ३७ केचनपंडिताअस्मिन्भवेसंसारेअविद्याका मकर्मभिः क्लिश्यमानानांदुःखेनपरिभूयमानानांश्रवणार्हाणिनामानिस्मरणार्हाणिरूपाणिकरिष्यन्नवतारादितिवदंति ३८ कर्मणांश्रवणस्मरणैःकिंफलमितितत्राह शृण्वंतीति येजनास्तवहे हितंचेष्टितंअभीक्ष्णशःशृण्वंतिगायंतिगृणंतिस्मरंतिनंदंतितएवाचिरेणक्षिप्रंभवप्रवाहोपरमंसंसारप्रवाहस्यउपरमोनिवृत्तिःविनाशोयस्मिन्तत्तावकंपदांबुजपश्यंतीत्येकान्वयः तस्मात्वत्कर्मश्रवणादिफल

केचिदाहुरजंजातंपुण्यश्लोकस्यकीर्तये ॥ यदोःप्रियस्यान्ववायेमलयस्येवचंदनम् ३५ अपरेवसुदेवस्यदेवक्यांयाचितोभ्यगात् ॥ अजस्त्वमस्यक्षेमाय वधायचसुरद्विषाम् ३६ भारावतारणायान्येभुवोनावइवोदधौ ॥ सीदंत्याभूरिभारेणजातोह्यात्मभुवार्थितः ३७ भवेस्मिन्क्लिश्यमानानामविद्याकाम कर्मभिः ॥ श्रवणस्मरणार्हाणिकरिष्यन्नितिकेचन ३८ शृण्वंतिगायंतिगृणंत्यभीक्ष्णशःस्मरंतिनंदंतितवेहितंजनाः ॥ तएवपश्यंत्यचिरेणतावकंभवप्र वाहोपरमंपदांबुजम् ३९ अप्यद्यनस्त्वंस्वकृतेहितःप्रभोजिहासिसिस्वित्सुहृदोनुजीविनः ॥ येषांनचान्यद्भवतःपदांबुजात्परायणंराजसुयोजितांहसाम् ४० केवयंनामरूपाभ्यांयदुभिःसहपांडवाः ॥ भवतोदर्शनंयर्हिहृषीकाणामिवेशितुः ४१ नेयंशोभिष्यतेतत्रयथेदानींगदाधर ॥ त्वत्पदैरंकिताभाति स्वलक्षणविलक्षितैः ४२

मुक्तिरेवेतिभावः ३९ स्वात्मादिभ्योऽत्यंतहितकरत्वात्त्वद्विरहोस्माकंअतिदुःसहइत्यभिप्रेत्याह अप्यद्येति प्रभोराजसुयोजितांहसांकृतापराधानांयेषांअस्माकंभवतःपदांबुजादन्यत्परायणंनास्ति त्वंता न्सुहृदोऽनुजीविनःकिंकरान्त्वद्भुक्तभोजनासिक्थसेविनोनोस्मान् जिहासासिआपेक्षिन् द्वारकागमनव्याजेनत्यक्तुमिच्छसिकिंस्वित् । कीदृशस्त्वंस्वकृतेहितःस्वतंत्रचेष्टितः स्वार्थंपरार्थंहितंनास्ति त्वप्रयोजनायकृतचेष्टोवा चशब्दएवार्थे ४० तत्कुतइतितत्राह तइति यदाईशितुरिंद्रियस्वामिनोदर्शनंनचेद्धृषीकाणांइंद्रियाणांदर्शनादिशक्तिर्न्यदानास्तीतियथा तथाचक्षूनांअस्माकंयर्हियदाभ वतोदर्शनंतदातेतवसकाशाद्यदुभिःसहपांडवाःकथं नामरूपाभ्यांयुधिष्ठिरादिनाम्नाशुक्लादिरूपेणचयुक्ताइतिशेषइत्यन्वयः यदायेषांयदूनांअस्माकंचभवतोदर्शनंतदातेयादवा वयंपांडवाश्चतेवय नामरूपवंतइतिवा केवयंइतिकेचित्पठंति यर्हिभवतोऽदर्शनं तदानाम्नायशसाबलेनरूपेणचलक्कोशाद्यात्मनायदुभिःसहवयंकेअसत्कल्पाएवेतितस्मात्त्वद्विरहोस्माकंमरणकल्पइत्यर्थः ४१ भोगदा धर इयंराजधानीइदानींध्वजादिलक्षणैर्विशेषेणचिह्नितैस्त्वत्पदैरंकितायथाभातितथायेद्वारकांगतेतथानशोभिष्यतइत्येकान्वयः अथवाइयंभूःत्वत्पदैरंकिताभाति त्वयिगतेकुतस्तथा शोभिष्यतइतिवा ४२

किमाहेतितत्राह अहोइति मेहृदिरूढमंकुरितमज्ञानंतत्पश्यत अहोआश्चर्यं कथंपारक्यस्यपरकीयस्यश्वशृगालभोग्यस्यैवदेहस्यार्थेबह्वघोक्षौणीरक्षौहिण्योहताएवत्वस्मा [illegible]
ह नमइति मेनिरयान्मोक्षोवर्षाणामयुतायुतैःनस्याद्धि कथंभूतस्यमे बालान्[illegible]द्विजान्द्रोणादीन्[illegible] [illegible]
धनादीन्गुरून्भीष्मादीनद्रोहितवान्हिंसितवान् इतिबालद्विजसुहृन्मित्रपितृभ्रातृगुरुध्रुक्तस्य ४ प्रजाभर्तुःप्रजा[illegible]द्विषांवधो [illegible]
नमितिपत् यःपदातिंहंतिसभवतिचातुर्मास्ययाजीत्यादिशाश्वतंनित्यंवेदवचोभवेत् [illegible] ५ [illegible]
नांमपाहतावंधवोयासांतास्तथातासां मत्निमित्तहताबंधवोयासामितिवा स्त्रीणांयोसौद्रोहोहिंसालक्षणोवैधव्यप्राप्त्या[illegible] [illegible]
समर्थइत्येकान्वयः ६ तत्रदृष्टांतमाह यथेति पंकांभःकर्दमजलंपंकेनकर्दमेनपुनःशोधयितुंयथानशक्नोति यथासुरा सुरयामिश्रोकृतंदोषंव्य[illegible]कर्तुंनशक्ता [illegible]

अहोमेपश्यताज्ञानंहृदिरूढंदुरात्मनः ॥ पारक्यस्यैवदेहस्यबह्वघोमेऽक्षौहिणीर्हताः ३ बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ॥ नमेस्यान्निरयान्मोक्षो
ह्यपिवर्षायुतायुतैः ४ नैनोराज्ञःप्रजाभर्तुर्धर्मेयुद्धेवधोद्विषाम् ॥ इतिमेनतुबोधायकल्पतेशाश्वतंवचः ५ स्त्रीणांमद्धतबंधूनांद्रोहोयोसाविहान्वितः ॥
कर्मभिर्हयमेधाद्यैर्नाहंकल्पोव्यपोहितुम् ६ यथापंकेनपंकांभःसुरयावासुराकृतम् ॥ भूतहत्यांतथैवेतांनयज्ञोमार्ष्टुमर्हति ७ सूतउवाच ॥ इतिश्रीतःप्रजाद्रोहा
त्सर्वधर्मविविस्तया ॥ ततोविशसनंप्रायाद्यत्रदेवव्रतोपतत् ८ तदातंभ्रातरःसर्वेसदश्वैःस्वर्णभूषितैः ॥ अन्वगच्छन्नथैविप्राव्यासधौम्यादयस्तथा
९ भगवानपिविप्रर्षैरथेनसधनंजयः ॥ सतैरथैरोचतनृपःकुबेरइवगुह्यकैः १० दृष्ट्वानिपतितंभूमौदिवश्च्युतमिवामरम् ॥ प्रणेमुःपांडवाभीष्मंसानुगाःसह
चक्रिणः ११ तत्रब्रह्मर्षयःसर्वेदेवर्षयश्चसत्तम ॥ राजर्षयश्चतत्रासन्द्रष्टुंभरतपुंगवम् १२ पर्वतोनारदोधौम्योभगवान्बादरायणः ॥ बृहदश्वोभरद्वाजःस
शिष्योरेणुकासुतः १३ वसिष्ठइंद्रप्रमदस्त्रितोगृत्समदोऽसितः ॥ कक्षीवान्गौतमोत्रिश्चकौशिकोथसुदर्शनः १४ अन्येचमुनयोब्रह्मन्ब्रह्मरातादयोमलाः
॥ शिष्यैरुपेताआजग्मुःकश्यपांगिरसादयः १५

पत्वादेतांभूतहत्यांमार्ष्टुमार्जयितुंनार्हतीत्येकान्वयः ज्ञानपक्षमाश्रित्ययुधिष्ठिरेणयज्ञोनिंदितोनत्वकर्तृत्वबुद्ध्या ब्रह्मार्पणंब्रह्महविरि[illegible]त्वयंनोदितः [illegible]
तीत्यादेश्च ७ प्रजाद्रोहादितिभीतःयुधिष्ठिरःसर्वधर्मज्ञानेच्छयाततोहास्तिनपुरात् विशसनंयुद्धस्थानंकुरुक्षेत्रंप्रायात्तत्रापियत्रदेवव्रतोभीष्मोपतदित्येकान्वयः ८ [illegible]
संतःप्रशस्ताअश्वायेषांतेतथातैःतथाव्यासादयोविप्राअन्वगच्छन्नित्यन्वयः ९ सधनंजयःसार्जुनः गुह्यकैर्यक्षैःकुबेरोवैश्रवण [illegible] १० [illegible]
गाच्च्युतंसमागतंदेवमिवद्योतमानम् ११ तत्रतदासर्वेदेवर्षयोनारदादयःब्रह्मर्षयोव्यासादयः राजर्षयोविश्वामित्रादयः [illegible]
स्यादिना रेणुकासुतःश्रीपरशुरामः १३ कौशिकोविश्वामित्रः १४ ब्रह्मरातःशुकः पर्वतादयअंगिरसांतामुनयःआजग्मुरित्यन्वयः ०

महाभागोवसूत्तमोभीष्मःसमेतान्संगतान्नृपादीनुपलभ्यदृष्ट्वामनसा प्रतिगम्यवा पूजयामास कथंभूतः देशकालविभागवित् देशःकुरुक्षेत्रं कालःशरतल्पशयन[illegible] तदोचितं[illegible]
चीतिप्रत्युत्थानादिवंदनादिपूजायामशक्तत्वान्मानसींवाचिकींआंजलिकींवापूजांकृतवानित्यर्थः अन्यत्रतद्देशतत्कालविभागंजानातीतिधर्मज्ञ आपत्संपद्धर्मौजानातीतिधर्मज्ञः [illegible]
तंजानातीतिवाधर्मज्ञः १६ कृष्णंचपूजयामासेत्येकान्वयः कथंभूतः तस्यकृष्णस्यप्रभावंसामर्थ्यंजानातीतितत्प्रभावज्ञः कथंभूतंतम्आसीनंजगदीश्वरं मायया[illegible]कृतवसुदे
वशरीरं हृदिमनसिस्थितं ध्यानलक्षणोपासनयाशरीरमध्येपुंडरीककर्णिकायांदीपवद्दीप्यमानम् १७ प्रश्रयगुणेनप्रेमगुणेनसम्यक्नतान्समीपेनिषण्णान्पांडोःपुत्रान्[illegible]
रंधीभूतेनचक्षुषायुक्तःइत्थंभूतलक्षणेतृतीयेतिसूत्रात् अभ्याचष्टआहआभिमुख्येनावक्ष्यदित्यन्वयः १८ भोधर्मनंदनयुधिष्ठिरयूयंक्लिष्टंक्लेशयुक्ततयाजीवितुंनार्हथ [illegible]
यालंकिमुबहुत्वंइत्यभिप्रायेणोक्तंविप्रधर्माच्युताश्रयाइति तथापियत्क्लिष्टंजीवथ तत्कष्टंअन्याय्यं अहोआश्चर्यादप्याश्चर्यं अहोअन्याय्यमिति[illegible]
मस्तीति तेषांभूभारावतारणायावतीर्णानामसुरजननिधनेनवनवासादिष्वपिनिःस्पृहत्वादिविशेषद्योतनार्थः धर्मस्यनंदनःधर्मंनंदयतीतिवा धर्मएवनंदनो[illegible]
स्यसतथेतिवा तस्मान्नंदनंसुखनंदनंयस्यसतथेतिवा १९ अतिरथेपांडौसंस्थितेस्वर्गंगतेसतिसत्यतोकवतीपुत्रसहितायथाबहुक्लेशवतीभवति तथा [illegible]

तान्समेतान्महाभागउपलभ्यवसूत्तमः ॥ पूजयामासधर्मज्ञोदेशकालविभागवित् १६ कृष्णंचतत्प्रभावज्ञआसीनंजगदीश्वरम् ॥ हृदिस्थंपूजयामासमाया
योपात्तविग्रहम् १७ पांडुपुत्रानुपासीनान्प्रश्रयप्रेमसन्नतान् ॥ अभ्याचष्टानुरागास्रैरंधीभूतेनचक्षुषा १८ भीष्मउवाच ॥ अहोकष्टमहोऽन्याय्यं
यद्यूयंधर्मनंदन ॥ जीवितुंनार्हथक्लिष्टंविप्रधर्माच्युताश्रयाः १९ संस्थितेतिरथेपांडौपृथाबालप्रजावधूः ॥ युष्मत्कृतेबहून्क्लेशान्प्राप्तातोकवतीमुहुः २०
सर्वंकालकृतंमन्येभवतांचयदप्रियम् ॥ सकालोयद्वशेलोकोवायोरिवघनावलिः २१ यत्रधर्मसुतोराजागदापाणिर्वृकोदरः ॥ कृष्णोऽस्त्रीगांडिवंचापंसुहृ
त्कृष्णस्ततोविपत् २२ नह्यस्यकर्हिचिद्राजन्पुमान्वेदविधित्सितम् ॥ यद्विजिज्ञासयायुक्तामुह्यंतिकवयोपिहि २३

षणपालनाद्यर्थात्बहुक्लेशान्प्राप्ता पुत्रबाहुल्येमतुप्प्रत्ययः । पुत्रवतीपुत्रपोषणादावतिक्लेशंप्राप्नोतिप्रथ तथेत्यन्वयदृष्टांतोवेत्येकान्वयः २० [illegible]
त्याभिप्रेत्याह सर्वमिति भवतांयदप्रियंदुःखादितत्सर्वंयुष्मत्प्रारब्धकर्मनियामककालाख्यहरिकृतंमन्ये वायोर्वशंगताघनावलिरिवजडाजडलोकोयस्यभगवतोवशेस्तिसनारायणःसर्वगुणपूर्णत्वात्कालइ
इत्युच्यतइत्येकान्वयः २१ अन्यथानुपपत्तितोप्ययंहेतुःसिध्यतीत्याह यत्रेति यत्रराजारंजकःधर्मस्यसुतः यत्रचतस्यराज्ञःकनिष्ठः[illegible]
वशीकृतपरब्रह्मावृकोदरः तथायत्रचेंद्रावतारःकृष्णोऽर्जुनोऽस्त्रीद्रोणादुपात्तास्त्रग्रामःतस्यचकरोरिपूणांपूयशोणितवमनकारिगांडीवाख्यंधनु यत्रचैषांसर्वमुपर्यधिराजाधिराज[illegible]
पार्णवःश्रीमान्वासुदेवःवसुदेवपुत्रःकृष्णःसुहृदानिमित्तबंधुस्ततस्तत्र विपत्प्रारब्धकर्माभावेविपत्कुतःस्यादस्तिचतस्मादित्येकान्वयः २२ [illegible]
न्त्वाचस्यस्वरूपजिज्ञासयायुक्ताःकवयोपिमुह्यंति अपामित्थंभूतइतिनिर्देष्टुंनजानंति हेराजंस्तस्यास्यविधित्सितंकर्तुमिष्टंकश्चिदपिपुमान्कदाचिदपिनवेद [illegible]
रयभवत्सुहृत्त्वेपिप्रारब्धकर्मानुकूल्येनविपत्करत्वंयुक्तमित्येकान्वयः २३

मार्दंगिकादिभिराहतामृदंगादयोनेदुरित्यन्वयः भेरीनामचर्मपिहितोदीर्घमहद्दारुकृतोवाद्यविशेषः धुंधुरिकारूपात्मकवाद्यं दुंदुभिःतिरश्चीनवाद्यविशेषः आनकःपटहः पणवोढक्काविशेषः १६ प्रेम्णा व्रीडेनस्मितेनचसहितमीक्षणंदर्शनंयासांतास्तथोक्ताःव्रीडाशब्दउभयलिंगः प्रेमव्रीडाभ्यांयत्स्मितंतत्पूर्वमीक्षणंयासामितिवा कुसुमैःकुसुमानि व्यत्ययोभक्त्यतिशयद्योतनार्थः पुष्पैःकरणैरितिवा १७ गुडाकानिद्रा । निद्रागुडाकासंप्रोक्ताप्रमीलामृत्युरुच्यतइत्यभिधानं तस्याःईशःगुडाकेशःजितनिद्रोर्जुनःइंद्रकीलकेविनिद्रोभूत्वातप्ततपाःपशुपतेरेतन्नामलब्धवान् गुडवद्रक्तकेशोवा दीर्घस्तुच्छांदसः । मुक्तादामविभूषितंमौक्तिकमालालंकृतमातपमंडलंरत्नखचितदंडंसितातपत्रंश्वेतच्छत्रंजग्राहेत्यन्वयः हरेरात्मादेरतिशयेनप्रियत्वंतदेतत्प्रेयइत्यादिश्रुतिप्रसिद्धंहशब्देनाह अर्जुनस्यकैंकर्यातिशयदर्शीवा । स्वसारथ्यकरणलक्षणापराधपरिहारार्थोवा १८ उद्धवसात्यकीचव्यजनेजगृहतुरितिपूर्वेणसंबंधः एवशब्दःस्वहस्ताभ्यामेवजगृहतुर्नत्वन्याभ्यांस्वदासाभ्यांइत्यस्मिन्नर्थे मधूनांयादवगोत्रविशेषा णांपतिः मुक्तार्थीशोवा कुसुमैःकुरुपुरपुरंध्रिकरकमलमुक्तैरितिशेषः पथिराजमार्गे १९ कुरुपुरेतत्रतत्रतत्तन्मार्गेद्विजैरपुखानिःसृताः दुष्टान्जहिसाधून्पालयपालयास्माननुगृहाणेत्यादिका शिषःशुभवाक्यप्रबंधाःअश्रूयंतेत्यन्वयः कीदृश्यःसत्याःयथार्थविषयाः निर्गुणस्यसत्वादिगुणप्रवृत्त्युदासीनस्यांडाद्बहिःस्थितस्यनानुरूपाअननुकूलाइति सत्वादिगुणकार्यादेःरक्षणात्सत्वादिगु णान्तरयतिसत्वंप्रवर्तयतीतिगुणात्मा अतसातत्यगमनइतिधातोः उणादिप्रत्ययनिमित्तमेतद्रूप । तस्यपालनादिकर्तुरनुरूपाः पालनानुग्रहादिगुणात्मनोवा चशब्दःसमुच्चयइवार्थोवा २० नवे

मृदंगशंखभेर्यश्ववीणापणवगोमुखाः ॥ धुंधुर्यानकघंटाद्यानेदुर्दुंदुभयस्तथा १६ प्रासादशिखरारूढाःकुरुनार्योदिदृक्षया ॥ ववृषुःकुसुमैःकृष्णंप्रेमव्रीड स्मितेक्षणाः १७ सितातपत्रंजग्राहमुक्तादामविभूषितम् ॥ रत्नदंडंगुडाकेशःप्रियंप्रियतमस्यह १८ उद्धवःसात्यकिश्चैवव्यजनेपरमाद्भुते ॥ विकीर्यमा णैःकुसुमैरेजेमधुपतिःपथि १९ अश्रूयंताशिषःसत्यास्तत्रतत्रद्विजेरिताः ॥ नानुरूपानुरूपाश्चनिर्गुणस्यगुणात्मनः २० अन्योन्यमासीत्संजल्पउत्तम श्लोकचेतसाम् ॥ कौरवेंद्रपुरस्त्रीणांसर्वश्रुतिमनोहरः २१ ॥ स्त्रियऊचुः ॥ सवैकिलायंपुरुषःपुरातनोयएकआसीदविशेषआत्मनि ॥ अग्रेगुणेभ्योजग दात्मनीश्वरेनिमीलितात्मानिशिसुप्तशक्तिषु २२ सएवभूयोनिजवीर्यचोदितांस्वजीवमायांप्रकृतिंसिसृक्षतीम् ॥ अनात्मरूपात्मनिरूपनामनीविधित्स मानोनुससारशास्त्रकृत् २३

वलंकुरुपुरस्त्रियोहरौपुष्पावकीरणमकुर्वन्किंतुस्तुतिमपीतिभावेनाह । अन्योन्यमिति उत्तमश्लोकचेतसांकौरवेंद्रपुरस्त्रीणांसर्वश्रुतीनांवेदाभिमानिनीनांदेवतानां मनोहरः सर्वेषांजंतूनांश्रुतीः श्र वणानिमनांसिचहरंतीतिवापरस्परंसंजल्पःस्तुतिलक्षणःसंलापआसीदित्येकान्वयः २१ कोसावितितत्राह सवाइति ह्यपेक्षयाऽप्रधानत्वात्गुणशब्दवाच्येभ्योमहदादितत्वेभ्योग्रेनिशिमहाप्र लयेसुप्तशक्तिषुशक्यत्वात्तदधीनत्वाच्छक्तिशब्दवाच्यासुसत्वादिगुणाभिमानिनीषुश्रीभूदुर्गासुसुप्तासुजगद्व्यापारान्विहायहरौरममाणासुसतीषुयएकःप्रधानोजगदात्मनिजगदाधारकर्तरिजगत्संहर्तरि नविशेषोविकोयस्मात्सोविशेषः तस्मिन्नीश्वरेईशानादिशक्तिमति सभगवःकस्मिन्प्रतिष्ठितइतिश्रुतेःस्वरूपाधारेस्थितःनिमीलितात्मा । तुच्छ्येनाभ्वपिहितंयदासीदितिश्रुतेर्गुणतोऽनतयात्मप्रभादिरूपप्र प्रकृत्यानिगूहितआसीत्सपुरातनःपुरुषोविष्णुरयंकृष्णः किलपरमार्थःसत्यं नैवानयोःकश्चिद्विशेषइत्यन्वयः २२ सएषएवपुरुषः पुनःसृष्टिकालेस्वलीलयाप्रकृतिं [illegible] ससारतस्यांवीर्यमधादित्यर्थः कथंभूतांनिजवीर्यचोदितांस्वसामर्थ्येनप्रेरितांसिसृक्षतींसृष्टीच्छावतीं कथंभूतःसःअप्राकृतगुणत्वादप्राकृतरूपत्वाच्चअनात्मरूपात्मनि [illegible] विवित्समानःरूपनामात्मकंप्रपंचंस्रष्टुमिच्छन् शास्त्रकृत्सकलनियमनकर्जायेर्वुक्तिभिः [illegible] २३

अत्रकर्मभूमौजितेंद्रियाःप्राणायामेननिर्जितमातरिश्वनःवशीकृतप्राणाःसूरयः भक्त्याउत्कलितेनविकसितेनउत्कंठितेनवाअमलेनरागादिमलरहितेनात्मनास्वरूपांतःकरणेनयत्पदंयस्यस्वरूपंपश्यंतिसएवा अयंकृष्णःकिलेत्यन्वयः एषकृष्णःसात्विकानामनुग्राहकःअस्माकसर्वंस्वविषयकंज्ञानपरिमार्ष्टुंनाशयितुंनार्हति परिपूर्णैश्वर्यविवर्जनार्थः । नन्वित्यनेन अपपरीदर्जनइतिसूत्रप्रामाण्यकादि इत्विति
२७ पाठःसुगमःकर्मणांऽतःकरणशुद्धिःकिंनस्यादितितत्राह नत्विति एषकर्मणासत्त्वमंतःकरणंपरितःसर्वतःमार्ष्टुंशोधयितुंनार्हतिकिंतुभक्त्याश्रवणाद्युपायसंस्कृतयायावदंतःकरणशुद्धिरिति ज्ञानयज्ञर्णेति
भावः २४ योवेदवादिभिरनंतवेदेषुगुह्येषुउपनिषत्सुचअनुगीतसत्कथःनिरंतरादितसच्चरितःयश्चैकएवईशः यश्चात्मलीलयाजगत्सृजति सृष्टमवतितत्तद्योग्यकर्मफलयुक्तये अतिलंघति यश्चज
गतिनसज्जते आत्मकामत्वात्फलंवादित्साति हेसखिसवाअयंकृष्णइत्येकान्वयः गुह्यवादिभिरितिपाठेउपनिषद्विचारकुशलैरित्यर्थः २५ तमोधिकास्तामसाअसुरप्रकृतयोनृपाः अधर्मेणधर्मविरुद्धेनवृ
त्तिरमूर्त्यविहितप्राणिहिंसादिकर्मणायदाजीवंतिस्वशरीरयात्रांकुर्वंति तत्रतदैवहरिःसात्वतःसात्विकान्देवादीन्अनुगृह्णन्धर्मादिनामयंतिरूपाणियुगेयुगेदधत्दधानोवर्ततइतिशेषः वराहरूपस्यादि
रूपस्यभूम्युद्धरणकर्मणाधर्माख्या कपिलादेरणिमाद्यष्टैश्वर्ययोगात्षड्गुणपूर्णत्वाद्भगाख्या कल्क्यादेस्तमोविनाश्यसत्वगुणमभिसंबध्यानंतगुणाभिव्यंजकतयाविशेषानंदरूपत्वात्सत्याख्या व्यासादे
र्ज्ञानप्रवर्तकत्वेनज्ञानविशिष्टत्वाद्यशआख्या किमर्थंभवाय चरणप्रणतजनाभिवृद्धयेतस्मादिदानीमधर्मप्रवर्तकान्जरासुतादीन्निगृह्णन्देवावतारान्युधिष्ठिरादीननुगृह्णन्कृष्णात्मनावतीर्ण.इत्यर्थः २६

सवाअयंयत्पदमत्रसूरयोजितेंद्रियानिर्जितमातरिश्वनः ॥ पश्यंतिभक्त्युत्कलितामलात्मनानन्वेषसत्वंपरिमार्ष्टुमर्हति २४ सवाअयंसख्यनुगीतसत्कथो
वेदेषुगुह्येषुचवेदवादिभिः ॥ यएकईशोजगदात्मलीलयासृजत्यवत्यत्तिनतत्रसज्जते २५ यदाह्यधर्मेणतमोधियोनृपाजीवंतितत्रैषहिसत्वतःकिल ॥ धत्ते
भगंसत्यमृतंदयांयशोभवायरूपाणिदधद्युगेयुगे २६ अहोअलंश्लाघ्यतमंयदोःकुलमहोअलंपुण्यतमंमधोर्वनम् ॥ यदेषपुंसामृषभःश्रियःपतिःस्वजन्मना
चंक्रमणेनचांचति २७ अहोबतस्वर्यशसस्तिरस्करीकुशस्थलीपुण्ययशस्करीभुवः ॥ पश्यंतिनित्यंयदनुग्रहेषितस्मितावलोकंस्वपतिंस्मयत्प्रजाः २८
नूनंव्रतस्नानहुतादिनेश्वरःसमर्चितोह्यस्यगृहीतपाणिभिः ॥ पिबंतियाःसख्यधरामृतंमुहुर्व्रजस्त्रियःसंमुमुहुर्यदाशयाः २९

प्रियश्रवाःमनोहरकीर्तिःपुंसामृषभःपुरुषोत्तमः एषःकृष्णःयदोःश्लाघ्यंस्तुत्यंमधुवनचालमत्यर्थमतिशयेनपुण्यमहोअहोआश्चर्यादप्याश्चर्यं चशब्दःसमुच्चये २७ अनुग्रहइषितादृष्टंप्रेमप्रे
क्तानुग्रहार्थंक्षितमृषितंमुखेस्थितंयत्स्मितंतेनयुक्तोऽवलोकोयस्यसतथोक्तःतंवा क्षितिनिवासगत्योरितियातुः भक्तेष्वनुग्रहेणयदीक्षितंगोपवधूरुद्दिश्यस्मितयुक्तावलोकश्चयस्यसतथोक्तःतंवा स्वपतिं
स्वस्वामिनंश्रीकृष्णंयत्प्रजाःयत्रत्याःप्रजाःनित्यंपश्यंतीतियद्यस्माच्चस्मात्कुशस्थलीद्वारवतीस्वर्यशसस्तिरस्करीस्वर्गकीर्तिनिरासिनीभुवःयशस्करीचेत्यन्वयः तदेवंवतीक्षणव्यपदेशादीक्षितमिच्छा
भक्तानुग्रहेच्छयासहितौस्मितावलोकौयस्यसतथातमितिवा २८ अस्यश्रीकृष्णस्यपाणिनागृहीताःपाणयोयासांताःतथाताभिरस्यभार्याभिर्नूनंनिश्चयेनव्रतस्नानादिनेश्वरःपूर्वंसम्यगर्चितःसत्कृतः
याःव्रजस्त्रियःयदाशयायस्याधरामृतमाधुर्यस्यास्वादनेच्छया सम्यक्मुमुहुर्हेसखितदधरामृतंमुहुःपिबंतीतियत्तस्मादित्येकान्वयः हेसखि याःस्त्रियोऽस्याधरामृतंपिबंतिअनेनगृहीतपाणिभि
स्ताभिर्नूनंव्रतादिनेश्वरःसमर्चितः यदाशयाव्रजस्त्रियोमुमुहुरितिवान्वयः २९

६६

ताः काइतितत्राहुः २९ इति विशुष्मिणः विशिष्टबलान् चैद्यप्रमुखान् शिशुपालादीन् प्रमथ्य विलोड्य पराजित्य स्वयंवरे वीर्यमेव शुल्कं उत्कोचं तेन याः स्त्रियो हृता आनीतास्ताः प्रद्युम्नप्रमुखा अस्योपमत्यो येषां ते तथा प्रद्युम्नसांबप्रमुखाः ते आत्मजा यासां तास्तथोक्ताः रुक्मिण्याद्याः याश्चापराः सहस्रशः कर्शेर्वादिशतोत्तरषोडशसहस्रसंख्याः भौमवधे आहृताः ३० एताः पुरा श्रीकृष्णभार्यास्त्वां पतिं स्ववश्याः पदे आयुं समं संभूय साधु शोभनं तप आख्यं कुर्वत अकुर्वत बत हर्षे निरस्तशोकमिति क्रियाविशेषणं वा कुतः पुष्करलोचनः पुंडरीकाक्षः पतिराकृतिभिराकारैश्चेष्टाविशेषैर्हृदि स्पृशन् यासां गृहात् जातु कदाचिदपि नापैति स्मात्तस्मादित्यन्वयः ३१ ३२ परेभ्यः गोपीथाय रक्षणाय चतुरंगिणीं हस्त्यश्वरथपदातिवतीं पृतनां सेनां स्नेहात् स्नेहमात्रात् दानीं माहात्म्यज्ञानं नास्तीति भावः ३३ स्वनगरीं द्वारवतीं प्रियैः पुरुषैः सह ३४ ३५ हे भार्गव शौनक कुरुजांगलप्रभृत्येकादशदेशानतिक्रम्य आगात् श्रांताश्वो विभुरानर्तान् स्वाधिकृतान् देशानुपागादित्यन्वयः ३६ यदा हरिः सायं संध्यासमये पश्चात् दिशं पश्चिमां दिशं भेजे कथंभूतः

यावीर्यशुल्केनहृताःस्वयंवरेप्रमथ्यचैद्यप्रमुखान्विशुष्मिणः ॥ प्रद्युम्नसांबप्रमुखात्मजाःपरायाश्चाहृताभौमवधेसहस्रशः ३० एताःपुरास्त्रीत्वमवाप्य येसमं
निरस्तशोकंबतसाधुकुर्वते ॥ यासांगृहात्पुष्करलोचनःपतिर्नजात्वपैत्याकृतिभिर्हृदिस्पृशन् ३१ सूतउवाच ॥ एवंविधागदंतीनांसगिरःपुरयोषिता
म् ॥ निरीक्षणेनाभिनंदन्सस्मितेनययौहरिः ३२ अजातशत्रुःपृतनांगोपीथायमधुद्विषः ॥ परेभ्यःशंकितःस्नेहात्प्रायुंक्तचतुरंगिणीम् ३३ अथदूरागता
न्छौरिःकौरवान्विदुरान्वितान् ॥ सन्निवर्त्यदृढस्निग्धान्प्रायात्स्वनगरींप्रियैः ३४ कुरुजांगलपांचालान्शूरसेनान्सयामुनान् ॥ ब्रह्मावर्तंकुरुक्षेत्रंमत्स्या
न्सारस्वतानथ ३५ मरुधन्वमतिक्रम्यसौवीराभीरसैंधवान् ॥ आनर्तान्भार्गवोपागाच्छ्रांतवाहोमनाग्विभुः ३६ तत्रतत्रचतत्रत्यैर्हरिःप्रत्युद्यतार्हणः ॥
सायंभेजेदिशंपश्चाद्गविष्ठोगांगतस्तदा ३७ आनर्तान्सउपव्रज्यस्वृद्धान्जनपदान्स्वकान् ॥ दध्मौदरवरंतेषांविषादंशमयन्निव ३८ सउच्चकाशेधवलो
दरोदरोप्युरुक्रमस्याधरशोणशोणिमा ॥ दाध्मायमानःकरकंजसंपुटेयथाब्जखंडेकलहंसउत्स्वनः ३९ तमुपश्रुत्यनिनदंजगद्भयभयापहम् ॥ प्रत्युद्ययुः
प्रजाःसर्वाभर्तृदर्शनलालसाः ४०

तत्रतत्र च स्वराष्ट्रे प्रतिपदं तत्रत्यैर्जनैः प्रत्युद्यतार्हणः प्रदत्तमाहृतधनः तदा गविष्ठः दिवि स्थितः आदित्यः गां समुद्रोदकं गतः अस्तं गत इत्यर्थः असौ वा गविष्ठोऽप्सूदेत्यप्स्वस्तमेतीति श्रुतेः ३७ सकृष्णः स्वृ द्धान् सुष्ठु संपन्नान् स्वकान् स्वीयान् नाम्ना आनर्तान् जनपदान् उपगम्य इति दरवरं शंखश्रेष्ठं दध्मौ पूरयामास तेषां विषादं राजकभयं शमयन् परिहरन्निवेत्यन्वयः ३८ सदरः पांचजन्याख्य उच्चकाशे धवलं उदरं यस्य स धवलोदरः अपि धवलोदरोपि उरुक्रमस्य श्रीकृष्णस्याधरोष्ठस्य शोणेन रागेण शोणिमा रक्तभावो यस्य स तथोक्तः दाध्मायमानः पुनःपुनः पूर्यमाणः करावेव कंजे हस्तकमले तयोः संपुटे मध्ये वर्तमान इति शेषः करकंजसंपुटे निधाय पदाध्मायमान इति वा तत्र दृष्टांतः अब्जखंडे कमले स्थितः उत्स्वनः उच्चध्वनिः कलहंसः राजहंसः यथा तथेत्यन्वयः ३९ भर्तृदर्शनलालसाः श्रीकृष्णस्य दर्शनोत्सुकाः सर्वाः प्रजाः जगद्भवः संसारः तस्माद्भयं ददातीति जगद्भयभयापहः तं जगद्भयमयापहमिति पाठे जगद्भयानां दैत्यानां सकाशाद्भयं यस्य स आश्रयः तं निनदं शंखध्वनिं श्रुत्वा तत्कालं प्रत्युद्ययुरित्यन्वयः ४०

निरपदानिजलाभेनस्वतोलब्धेनपूर्णकामं अतएवात्मारामंआत्मन्येवरममाणंकृष्णंनत्वाहर्षेणगद्गदयागिरा [illegible]
नीतःसमर्पितःबलिःभागधेयःयाभिस्तास्तथाबलिःपूजासाधनंवा कथमिवतेजःपुंजस्यरवेर्दीपमिव आत्मारामत्वादलंबुद्ध्येतिभावः [illegible]
दानेनपालकत्वात्पितरं सर्वस्यादात्मादेःसुहृदमनिमित्तबंधुं ज्ञानादिदानेनावनकर्तृत्वादवितारं ४१ ४२ हेनाथसदांघ्रिपंकजंसदानताःस्मेत्यन्वयः [illegible]
इहचेतनाराणिमध्येपरंक्षेमंमोक्षमिच्छतांभक्तानांपरायणंउत्तमाश्रय परस्यहिरण्यगर्भस्यप्रभुःसमर्थोजननमरणधर्मापादकोपिकालःयत्रपदारविंदेभक्तानानप्रभवेत् [illegible]
प्रभुःकालः यत्रभक्तानांनप्रभवेदतस्तस्यांघ्रिपंकजस्यनसमर्थइतिकिंवाच्यमितिवा ४३ हेविश्वभावन जगतःसत्तादिप्रद त्वंनोस्माकंभवाय [illegible]
नानुवर्तनेनकृतिनःसुकृतिनोबभूविम सत्वंनःपरमंदैवतंइष्टदेवतानःसद्गुरुर्निर्दोषगुरुस्थानीयश्च त्वमेवमाता [illegible]
मेति यद्यस्मात्तस्माद्वयंभवतासनाथाःस्म नाथवंतोभवाम अहोअस्मद्भाग्यमित्यन्वयः कथंभूतंत्रैविष्टपानांइंद्रादिदेवानामपिदूरतःचिरकालकृतःचीर्णतपःसप [illegible]

नत्वोपनीतबलयोरवेर्दीपमिवादृताः ॥ आत्मारामंपूर्णकामंनिजलाभेननित्यदा ४१ प्रीत्युत्फुल्लमुखाःप्रोचुर्हर्षगद्गदयागिरा ॥ पितरंसर्वसुहृदमवि
तारमिवार्भकाः ४२ नताःस्मतेनाथसदांघ्रिपंकजंविरिंचवैरिंचसुरेंद्रवंदितम् ॥ परायणंक्षेममिहेच्छतांपरंनयत्रकालःप्रभवेत्परःप्रभुः ४३ भवायन
स्त्वंभवविश्वभावनत्वमेवमातात्मसुहृत्पतिःपिता ॥ त्वंसद्गुरुर्नःपरमंचदैवतंयस्यानुवृत्त्याकृतिनोबभूविम ४४ अहोसनाथाभवतास्मयद्वयंत्रैविष्टपाना
मपिदूरदर्शनम् ॥ प्रेमस्मितस्निग्धनिरीक्षणाननंपश्येमरूपंतवसर्वसौभगम् ४५ यर्ह्यंबुजाक्षापससारभोभवान्कुरून्मधून्वाथसुहृद्दिदृक्षया ॥ तत्रा
ब्दकोटिप्रतिमःक्षणोभवेद्रवेर्विनाक्ष्णामिवनस्तवाच्युत ४६ इतिचोदीरितावाचःप्रजानांभक्तवत्सलः ॥ शृण्वानोनुग्रहंदृष्ट्यावितन्वन्प्राविशत्पुरम् ४७
मधुभोजदशार्हार्हकुकुरांधकवृष्णिभिः ॥ आत्मतुल्यबलैर्गुप्तांनागैर्भोगवतीमिव ४८ सर्वर्तुसर्वविभवैःपुण्यवृक्षलताश्रमैः ॥ उद्यानोपवनारामैर्वृतप
द्माकरश्रियम् ४९

साधनसाध्यत्वेनाभिप्रेता नतुदर्शनाभावः तैःप्रार्थितत्वेनतत्कार्यार्थमवतीर्णत्वाद्दर्शनतारतम्याभिप्रायोवा प्रेम्णास्मितंस्निग्धंनिरीक्षणंमधुरावलोकनंताभ्यांयुक्तमाननंयस्यतत्तथोक्तं संपूर्णसौभगं
सौंदर्यंयस्मिंस्तत्तथोक्तं ४५ हेअंबुजाक्षअथयर्हियदामाधवःश्रीवल्लभोभवान्मधुविषयेभ्यःसुहृदांपांडवानांदिदृक्षयादर्शनेच्छया कुरून्कुरुविषयान् कुरुविषयेभ्योमधून्वायातेगच्छति हेअच्युत
तत्तस्यामवस्थायांतवेतिषष्ठीद्वितीयार्थे त्वांविनाकुरूणांमधूनांचनोस्माकंयथारविंविनाक्ष्णांतथैकःक्षणःकालःअब्दकोटिप्रतिमःवर्षकोटिसमानःस्यादित्येकान्वयः ४६ दृष्ट्यानुग्रहंवितन्वन् शृण्वानः
शृण्वन् चशब्दाद्वादिमागधादीनांगिरः ४७ गुप्तारक्षिता भोगवतीनामनागानांपुरी आत्मतुल्यबलैःपरस्परमात्मनातुल्यवीर्यैराधिकहृष्टांतस्यादोवा ४८ वसंतादिऋतूनांसर्वविभवैः पुष्प
पुष्पसंपत्तिभिःपुण्यैर्वृक्षैरश्वत्थादिभिर्न्यग्रोधरुहाभिःकल्पवल्लीभिर्वा । आश्रमैरुपदेशस्थानैः । उद्यानैःप्रमदाभिःसहराज्ञांक्रीडाभूमिभिः उपवनैः [illegible] आरामैः पुरा
द्बहिःरथ्योभयपार्श्वरोपितवृक्षसमुदायैरेतैःसर्वर्तुसर्वविभवादिभिःवृतापद्माकराणांश्रीःशोभायस्यास्तांतथोक्तांताम् ४९

